अभीष्टसूचनम्

आभीरपल्लीपतिपुत्रकान्ता
दास्याभिलासातिबलाश्ववारः ।
श्रीरूपचिन्तामणिसप्तिसंस्थो
मत्स्वान्तदुर्दान्थियेच्छुरास्ताम् ॥१ ॥

यद्यत्नतः शमदमात्मविवेकयोगै
रध्यात्मलग्नमविकारमभून्मनो मे ।
रूपस्य तत्स्मितसुधं सदयावलोक
मासाद्य माद्यति हरेश्चतैरिदानीम् ॥२ ॥

निभृतविपिनलीलाः कृष्णवक्त्रं सदाक्ष्णा
प्रपिबथ मृगकन्या यूयमेवातिधन्याः ।
क्षणमपि न विलोके सारमेयी व्रस्था
प्युदरभरणवृत्त्या बम्भ्रमन्ती हताहम् ॥३ ॥

मन्मानसोन्मीलदनेकसङ्गम
प्रयासकुञ्जोदरलब्धसङ्ग्योः ।
निवेद्य सख्यर्पय मां स्वसेवने
वीटीप्रदानावसरे व्रजेशयोः ॥४ ॥

निविडरतिविलासायासगाढालसाङ्गीं

श्रमजलकणिकाभिः क्लिन्नगण्डां नु राधाम् ।
व्रजपतिसुतवक्षःपीठविन्यस्तदेहा
मपि सखि भवतीभिः सेव्यमानां विलोके ॥५॥

दितिजकुलनितान्तध्वान्तमश्रान्तमस्यन्
स्वजनजनचकोरप्रेमपीयूषवर्षी
करशिशिरितराधाकैरवोत्फुल्लवल्ली
कुचकुसुमगुलुच्छः पातु कृष्णौषधीशः ॥६॥

रासे लास्यं रसवति समं राधया माधवस्य
क्ष्माभृत्कच्छे दधिकरकृते स्फारकेलीविवादम् ।
आलीमध्ये स्मरपवनजं नर्मभङ्गीतरङ्गं
काले कस्मिन्कुशलभरिते हन्त साक्षात्करोमि ॥७॥

रोहिण्याग्रे कृताशीःशतमथ सभयानन्दमाभीरभर्ता
भीत्या शश्वन्नृसिंहे हलिनि सखिकुले न्यस्य सास्त्रं व्रजेश्या ।
साटोपस्नेहमुद्यद्व्रजजननिवहे राधिकादिप्रियाभिः
सश्लाघं वीक्ष्यमाणः श्रितसुरभिरटन्नव्यगोपः स पायात् ॥८॥

अदृष्टा दृष्टेव स्फुरति सखि केयं व्रजवधूः
कुतोऽस्मिन्नायाता भजितुमतुला त्वां मधुपुरात् ।
अपूर्वेणापूर्वां रमय हरिणैनामिति स रा
धिकोद्यद्भङ्ग्युक्त्या विदितयुवतिभ्यः स्मितमधात् ॥९॥

राधेति नाम नवसुन्दरदीधुमुग्धं
कृष्णेति नाम मधुराद्भुतगाढदुग्धम् ।
सर्वक्षणं सुरभिरागहिमेन रम्यं
कृत्वा तदेव पिब मे रसने क्षुधार्ते ॥ १० ॥

चैतन्यचन्द्र मम हृत्कुमुदं विकाश्य
हृद्यं विधेहि निजचिन्तनभृङ्गरङ्गैः ।
किं चापराधतिमिरं निविडं विधूय
पादामृतं सदय पायय दुर्गतं माम् ॥११ ॥

पिकपटुरववाद्यैर्भृङ्गझङ्कारगानैः
स्फुरदतुलकुडुङ्गक्रोडरङ्गे सरङ्गम् ।
स्मरसदसि कृतोद्यन्नृत्यतः श्रान्तगात्रं
व्रजनवयुवयुग्मं नर्तकं वीजयामि ॥१२ ॥

यत्पादाम्बुजयुग्मविच्युतरजःसेवाप्रभावादहं
गान्धर्वासरसीगिरीन्द्रनिकटे कष्टोऽपि नित्यं वसन् ।
तत्प्रेयोगणपालितो जितसुधा राधामुकुन्दाभिधा
उद्गायामि शृणोमि मां पुनरहो श्रीमान्स रूपोऽवतु ॥१३ ॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचितस्तवावल्यां श्रीभीष्टसूचनं सम्पूर्णम् ।